श्रीहरिः

# श्रीहनुमत्सहस्रनामस्तोत्रम्





गी ता प्रे स, गो र ख पु र

श्रीहरिः

# श्रीहनुमत्सहस्रनामस्तोत्रम्



गीताप्रेस, गोरखपुर

|| श्रीरामाय नमः ||

# श्रीहनुमत्सहस्रनामस्तोत्रम्

उद्यदादित्यसंकाशमुदारभुजविक्रमम् ।
कन्दर्पकोटिलावण्यं सर्वविद्याविशारदम् ॥
श्रीरामहृदयानन्दं भक्तकल्पमहीरुहम् ।
अभयं वरदं दोर्भ्यां कलये मारुतात्मजम् ॥

## अथ सहस्रनामस्तोत्रम्

हनुमान् श्रीप्रदो वायुपुत्रो रुद्रोऽनघोऽजरः ।
अमृत्युर्वीरवीरश्च ग्रामावासो जनाश्रयः ।१।
धनदो निर्गुणः शूरो वीरो निधिपतिर्मुनिः ।
पिङ्गाक्षो वरदो वाग्मी सीताशोकविनाशकः॥
शिवः शर्वः परोऽव्यक्तो व्यक्ताव्यक्तो धराधरः
पिङ्गकेशः पिङ्गरोमा श्रुतिगम्यः सनातनः ।३।

अनादिर्भगवान् देवो विश्वहेतुर्निराश्रयः ।
आरोग्यकर्ता विश्वेशो विश्वनाथो हरीश्वरः ॥
भर्गो रामो रामभक्तः कल्याणः प्रकृतिस्थिरः ।
विश्वम्भरो विश्वमूर्तिर्विश्वाकारश्च विश्वपाः ।५।
विश्वात्मा विश्वसेव्योऽथ विश्वो विश्वहरो रविः ।
विश्वचेष्टो विश्वगम्यो विश्वध्येयः कलाधरः ॥
प्लवङ्गमः कपिश्रेष्ठो वेदवेद्यो वनेचरः ।

बालो वृद्धो युवा तत्त्वं तत्त्वगम्यः सुखो ह्यजः
अञ्जनासूनुरव्यग्रो ग्रामख्यातो धराधरः।
भूर्भुवस्स्वर्महर्लोको जनोलोकस्तपोऽव्ययः॥
सत्यमोंकारगम्यश्च प्रणवो व्यापकोऽमलः।
शिवो धर्मप्रतिष्ठाता रामेष्टःफल्गुनप्रियः।९।
गोष्पदीकृतवारीशः पूर्णकामो धरापतिः।
रक्षोघ्नः पुण्डरीकाक्षः शरणागतवत्सलः।१०।

जानकीप्राणदाता च रक्षःप्राणापहारकः ।
पूर्णसत्त्वः पीतवासा दिवाकरसमप्रभः ॥११॥
द्रोणहर्ता शक्तिनेता शक्तिराक्षसमारकः ।
अक्षघ्नो रामदूतश्च शाकिनीजीवहारकः ।१२।
बुभुकारहतारातिर्दुष्टगर्वप्रमर्दनः ।
हेतुः सहेतुः प्रांशुश्च विश्वभर्ता जगद्गुरुः ।१३।
जगत्त्राता जगन्नाथो जगदीशो जनेश्वरः ।

जगत्पिता हरिः श्रीशो गरुडस्मयभञ्जनः ॥
पार्थध्वजो वायुसुतोऽमितपुच्छोऽमितप्रभः ।
ब्रह्मपुच्छं परब्रह्मपुच्छो रामेष्ट एव च ॥१५॥
सुग्रीवादियुतो ज्ञानी वानरो वानरेश्वरः ।
कल्पस्थायी चिरंजीवी प्रसन्नश्च सदाशिवः ॥
सन्नतिः सद्गतिर्भुक्तिमुक्तिदः कीर्तिदायकः ।
कीर्तिः कीर्तिप्रदश्चैव समुद्रः श्रीप्रदः शिवः १७

उदधिक्रमणो देवः संसारभयनाशनः। 
वार्धिबन्धनकृद् विश्वजेता विश्वप्रतिष्ठितः १८

लङ्कारिः कालपुरुषो लङ्केशगृहभञ्जनः।
भूतावासो वासुदेवो वसुस्त्रिभुवनेश्वरः ।१९।

श्रीरामदूतः कृष्णश्च लङ्काप्रासादभञ्जकः।
कृष्णः कृष्णस्तुतः शान्तः शान्तिदो विश्वपावनः॥

विश्वभोक्ता च मारघ्नो ब्रह्मचारी जितेन्द्रियः ।
ऊर्ध्वगो लाङ्गुली माली लाङ्गूलहतराक्षसः ॥
समीरतनुजो वीरो वीरमारो जयप्रदः ।
जगन्मङ्गलदः पुण्यः पुण्यश्रवणकीर्तनः ।२२।
पुण्यकीर्तिः पुण्यगतिर्जगत्पावनपावनः ।
देवेशो जितमारश्च रामभक्तिविधायकः ।२३।
ध्याता ध्येयो भगः साक्षी चेता चैतन्यविग्रहः ।

ज्ञानदः प्राणदः प्राणो जगत्प्राणः समीरणः २४ स० ११
विभीषणप्रियः शूरः पिप्पलायनसिद्धिदः।
सुहृत सिद्धाश्रयः कालः कालभक्षकभञ्जनः॥
लङ्केशनिधनः स्थायी लङ्कादाहक ईश्वरः।
चन्द्रसूर्याग्निनेत्रश्च कालाग्निः प्रलयान्तकः
कपिलः कपिशः पुण्यराशिर्द्वादशराशिगः।
सर्वाश्रयोऽप्रमेयात्मा रेवत्यादिनिवारकः।२७।

हु० १२

लक्ष्मणप्राणदाता च सीताजीवनहेतुकः ।
रामध्येयो हृषीकेशो विष्णुभक्तो जटी बली ॥
देवारिदर्पहा होता कर्ता हर्ता जगत्प्रभुः ।
नगरग्रामपालश्च शुद्धो बुद्धो निरन्तरः ॥२९॥
निरञ्जनो निर्विकल्पो गुणातीतो भयंकरः ।
हनुमांश्च दुराराध्यस्तपस्साध्यो महेश्वरः ।३०।
जानकीघनशोकोत्थतापहर्ता परात्परः ।

वाङ्मयः सदसद्रूपः कारणं प्रकृतेः परः ॥३१॥ स० १३
भाग्यदो निर्मलो नेता पुच्छलङ्काविदाहकः।
पुच्छबद्धो यातुधानो यातुधानारिपुप्रियः।३२।
छायापहारी भूतेशो लोकेश सद्गतिप्रदः।
प्लवङ्गमेश्वरः क्रोधः क्रोधसंरक्तलोचनः।३३।
क्रोधहर्ता तापहर्ता भक्ताभयवरप्रदः।
भक्तानुकम्पी विश्वेशः पुरुहूतः पुरंदरः।३४।

अग्निर्विभावसुर्भास्वान् यमो निर्ऋतिरेव च ।
वरुणो वायुगतिमान् वायुः कौबेर ईश्वरः ।३५।
रविश्चन्द्रः कुजः सौम्यो गुरुः काव्यः शनैश्चरः
राहुः केतुर्मरुद्धाता धर्ता हर्ता समीरजः ।३६।
मशकीकृतदेवारिर्दैत्यारिर्मधुसूदनः ।
कामः कपिः कामपालः कपिलो विश्व जीवनः ॥
भागीरथीपदाम्भोजः सेतुबन्धविशारदः ।

स्वाहा स्वधा हविः कव्यं हव्यवाहप्रकाशकः ॥ स० १८
स्वप्रकाशो महावीरो लघुश्चामितविक्रमः।
प्रडीनोड्डीनगतिमान् सद्गतिः पुरुषोत्तमः।३९।
जगदात्मा जगद्योनिर्जगदन्तो ह्यनन्तकः।
विपाप्मा निष्कलङ्कश्च महान् मदहंकृतिः॥
खं वायुः पृथिवी ह्यापो वह्निर्दिक्पाल एव च।
क्षेत्रज्ञः क्षेत्रपालश्च पल्वलीकृतसागरः॥४१॥

हिरण्मयः पुराणश्च खेचरो भूचरो मनुः।
हिरण्यगर्भः सूत्रात्मा राजराजो विशाम्पतिः॥
वेदान्तवेद्य उद्गीथो वेदवेदाङ्गपारगः।
प्रतिग्रामस्थितः साध्यः स्फूर्तिदाता गुणाकरः॥
नक्षत्रमाली भूतात्मा सुरभिः कल्पपादपः।
चिन्तामणिर्गुणनिधिः प्रजापतिरनुत्तमः।४४।

पुण्यश्लोकः पुरारातिर्ज्योतिष्माञ्शर्वरीपतिः । स० १७
किलिकिल्यारवत्रस्तप्रेतभूतपिशाचकः ॥४५॥
ऋणत्रयहरः सूक्ष्मः स्थूलः सर्वगतिः पुमान् ।
अपस्माररहरः स्मर्ता श्रुतिर्गाथा स्मृतिर्मनुः ॥
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं कपीश्वरः ।
नादरूपः परब्रह्म ब्रह्मब्रह्म पुरातनः ॥४७॥

एको नैको जनः शुक्लः स्वयंज्योतिरनाकुलः।
ज्योतिर्ज्योतिरनादिश्च सात्त्विको राजसत्तमः
तमोहर्ता निरालम्बो निराकारो गुणाकरः।
गुणाश्रयो गुणमयो बृहत्कायो बृहद्यशाः ४९
बृहद्धनुर्बृहत्पादो बृहन्मूर्धा बृहत्स्वनः।
बृहत्कर्णो बृहन्नासो बृहन्नेत्रो बृहद्गलः ॥५०॥
बृहद्यत्नो बृहच्चेष्टो बृहत्पुच्छो बृहत्करः।

बृहद्गतिर्बृहत्सेव्यो बृहल्लोकफलप्रदः ॥५१॥ स० १९
बृहच्छक्तिर्बृहद्वाञ्छाफलदो बृहदीश्वरः ।
बृहल्लोकनुतो द्रष्टा विद्यादाता जगद्गुरुः ॥
देवाचार्यः सत्यवादी ब्रह्मवादी कलाधरः ।
सप्तपातालगामी च मलयाचलसंश्रयः ॥५३॥
उत्तराशास्थितः श्रीदो दिव्यौषधिवशः खगः ।
शाखामृगः कपीन्द्रश्च पुराणः श्रुतिसंचरः ॥५४॥

चतुरो ब्राह्मणो योगी योगगम्यः परात्परः ।
अनादिनिधनो व्यासो वैकुण्ठः पृथिवीपतिः ॥
पराजितो जितारातिः सदानन्दश्च ईशिता ।
गोपालो गोपतिर्गोप्ता कलिः कालः परात्परः ॥
मनोवेगी सदायोगी संसारभयनाशनः ।
तत्त्वदाता च तत्त्वज्ञस्तत्त्वं तत्त्वप्रकाशकः ॥

शुद्धो बुद्धो नित्यमुक्तो भक्तराजो जयप्रदः ।

प्रलयोऽमितमायश्च मायातीतो विमत्सरः ५८ स० २१
मायानिर्जितरक्षाश्च मायानिर्मितविष्टपः।
मायाश्रयश्च निर्लेपो मायानिर्वञ्चकः सुखः॥
सुखी सुखप्रदो नागो महेशकृतसंस्तवः।
महेश्वरः सत्यसंधः शरभः कलिपावनः॥६०॥
रसो रसज्ञः सम्मानस्तपश्चक्षुश्च भैरवः।
घ्राणो गन्धः स्पर्शनं च स्पर्शोऽहंकारमानदः॥

नेतिनेतीतिगम्यश्च वैकुण्ठभजनप्रियः ।
गिरिशो गिरिजाकान्तो दुर्वासाः कविरङ्गिराः
भृगुर्वसिष्ठश्च्यवनस्तुम्बुरुर्नारदोऽमलः ।
विश्वक्षेत्रं विश्वबीजं विश्वनेत्रश्च विश्वगः ।६३।
याजको यजमानश्च पावकः पितरस्तथा ।
श्रद्धा बुद्धिः क्षमा तन्द्रा मन्त्रो मन्त्रयुतः स्वरः ॥
राजेन्द्रो भूपती रुण्डमाली संसारसारथिः ।

नित्यः सम्पूर्णकामश्च भक्तकामधुगुत्तमः ६५ स०
गणपः कीशपो भ्राता पिता माता च मारुतिः । २३
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ ६६ ॥
कामजित् कामदहनः कामः काम्यफलप्रदः ।
मुद्राहारी राक्षसघ्नः क्षितिभारहरो बलः । ६७ ।
नखदंष्ट्रायुधो विष्णुभक्तोऽभयवरप्रदः ।
दर्पहा दर्पदो दृप्तः शतमूर्तिरमूर्तिमान् ॥ ६८ ॥

महानिधिर्महाभोगो महाभागो महार्थदः।
महाकारो महायोगी महातेजा महाद्युतिः ६९
महाकर्मा महानादो महामन्त्रो महामतिः।
महाशयो महोदारो महादेवात्मको विभुः ७०
रुद्रकर्मा क्रूरकर्मा रत्ननाभः कृतागमः।
अम्भोधिलङ्घनः सिंहो नित्यो धर्मः प्रमोदनः॥

जितामित्रो जयः सोम विजयो वायुवाहनः।

जीवदाता सहस्रांशुर्मुकुन्दो भूरिदक्षिणः ७२ स०
सिद्धार्थः सिद्धिदः सिद्धसंकल्पः सिद्धिहेतुकः। २५
सप्तपातालचरणः सप्तर्षिगणवन्दितः ॥७३॥
सप्ताब्धिलङ्घनो वीरः सप्तद्वीपोरुमण्डलः।
सप्ताङ्गराज्यसुखदः सप्तमातृनिषेवितः ॥७४॥
सप्तलोकैकमुकुटः सप्तहोता स्वराश्रयः।
सप्तच्छन्दोनिधिः सप्तच्छन्दाः सप्तजनाश्रयः

ह० २६ सप्तसामोपगीतश्च सप्तपातालसंश्रयः।
मेधावी कीर्तिदः शोकहारी दौर्भाग्यनाशनः॥
सर्ववश्यकरो गर्भदोषघ्नः पुत्रपौत्रदः।
प्रतिवादिमुखस्तम्भी तुष्टचित्तः प्रसादनः ७७
पराभिचारशमनो दुःखघ्नो बन्धमोक्षदः।
नवद्वारपुराधारो नवद्वारनिकेतनः ॥७८॥
नरनारायणस्तुत्यो नरनाथो महेश्वरः।

मेखली कवची खड्गी
भ्राजिष्णुर्जिष्णुसारथिः ॥ ७९ ॥
बहुयोजनविस्तीर्णपुच्छः पुच्छहतासुरः।
दुष्टग्रहनिहन्ता च पिशाचग्रहघातकः ॥८०॥
बालग्रहविनाशी च धर्मो नेता कृपाकरः।
उग्रकृत्यश्चोग्रवेग उग्रनेत्रः शतक्रतुः ॥८१॥
शतमन्युस्तुतः स्तुत्यः स्तुतिः स्तोता महाबलः

समग्रगुणशाली च व्यग्रो रक्षोविनाशकः ८२

रक्षोघ्नहस्तो ब्रह्मेशः श्रीधरो भक्तवत्सलः।

मेघनादो मेघरूपो मेघवृष्टिनिवारकः॥८३॥

मेघजीवनहेतुश्च मेघश्यामः परात्मकः।

समीरतनयो बोद्धा तत्त्वविद्याविशारदः॥८४॥

अमोघोऽमोघदृष्टिश्च इष्टदोऽनिष्टनाशनः।

अर्थोऽनर्थापहारी च समर्थो रामसेवकः॥८५॥

अर्थी धन्योऽसुराराातिः पुण्डरीकाक्ष आत्मभूः।
संकर्षणो विशुद्धात्मा विद्याराशिः सुरेश्वरः८६
अचलोद्धारको नित्यः सेतुकृद् रामसारथिः।
आनन्दःपरमानन्दो मत्स्यः कूर्मो निधिःशमः
वाराहो नारसिंहश्च वामनो जमदग्निजः।
रामः कृष्णः शिवो बुद्धः कल्की रामाश्रयो हरः
नन्दी भृङ्गी च चण्डी च गणेशो गणसेवितः।

कर्माध्यक्षः सुराध्यक्षो विश्रमो जगताम्पतिः ॥
जगन्नाथः कपिश्रेष्ठः सर्वावासः सदाश्रयः ।
सुग्रीवादिस्तुतः शान्तः सर्वकर्मा प्लवङ्गमः ९०
नखदारितरक्षाश्च नखयुद्धविशारदः ।
कुशलः सुघनः शेषो वासुकिस्तक्षकः स्वरः ९१
स्वर्णवर्णो बलाढ्यश्च रामपूज्योऽघनाशनः ।
कैवल्यदीपः कैवल्यं गरुडः पन्नगो गुरुः ९२

किल्याराबहतारातिगर्वः पर्वतभेदनः । स०
वज्राङ्गो वज्रवेगश्च भक्तो वज्रनिवारकः ॥१३॥ ३१
नखायुधो मणिग्रीवो ज्वालामाली च भास्करः
प्रौढप्रतापस्तपनो भक्ततापनिवारकः ॥१४॥
शरणं जीवनं भोक्ता नानाचेष्टो ह्यचञ्चलः ।
सुस्वस्थोऽस्वास्थ्यहा दुःखशमनः पवनात्मजः
पावनः पवनः कान्तो भक्तागस्सहनो बलः ।

मेघनादरिपुर्मेघनादसंहृतराक्षसः ॥९६॥
क्षरोऽक्षरो विनीतात्मा वानरेशः सताङ्गतिः ।
श्रीकण्ठः शितिकण्ठश्च सहायः सहनायकः ॥
अस्थूलस्त्वनणुर्भर्गो देवः संसृतिनाशनः ।
अध्यात्मविद्यासारश्च अध्यात्मकुशलःसुधीः
अकल्मषः सत्यहेतुः सत्यगः सत्यगोचरः ।
सत्यगर्भः सत्यरूपः सत्यं सत्यपराक्रमः ९९

अञ्जनाप्राणलिङ्गश्च वायुवंशोद्भवः शुभः। स० ३३
भद्ररूपो रुद्ररूपः सुरूपश्चित्ररूपधृत् १००
मैनाकवन्दितः सूक्ष्मदर्शनो विजयो जयः।
क्रान्तादिङ्मण्डलो रुद्रः प्रकटीकृतविक्रमः॥
कम्बुकण्ठः प्रसन्नात्मा ह्रस्वनासो वृकोदरः।
लम्बोष्ठः कुण्डली चित्रमाली योगविदां वरः॥
विपश्चित कविरानन्दविग्रहोऽनन्यशासनः।

फाल्गुनीसूनुरव्यग्रो योगात्मा योगतत्परः॥
योगवेद्यो योगकर्ता योगयोनिर्दिगम्बरः।
अकारादिक्षकारान्तवर्णनिर्मितविग्रहः।१०४।
उलूखलमुखः सिंहः संस्तुतः परमेश्वरः।
श्लिष्टजङ्घः श्लिष्टजानुः श्लिष्टपाणिः शिखाधरः।
सुशर्मामितशर्मा च नारायणपरायणः।

जिष्णुर्भविष्णू रोचिष्णुर्ग्रसिष्णुः स्थाणुरेव च॥
हरी रुद्रानुकृद् वृक्षकम्पनो भूमिकम्पनः।
गुणप्रवाहः सूत्रात्मा वीतरागः स्तुतिप्रियः॥
नागकन्याभयध्वंसी रुक्मवर्णः कपालभृत
अनाकुलो भवोपायोऽनपायो वेदपारगः १०८
अक्षरः पुरुषो लोकनाथो रक्षःप्रभुर्दृढः।
अष्टाङ्गयोगफलभुक् सत्यसंधः पुरुष्टुतः॥

श्मशानस्थाननिलयः प्रेतविद्रावणक्षमः ।
पञ्चाक्षरपरः पञ्चमातृको रञ्जनध्वजः ॥ ११० ॥
योगिनीवृन्दवन्द्यश्च शत्रुघ्नोऽनन्तविक्रमः ।
ब्रह्मचारीन्द्रियरिपुर्धृतदण्डो दशात्मकः १११
अप्रपञ्चः सदाचारः शूरसेनाविदारकः ।
वृद्धः प्रमोद आनन्दः सप्तजिह्वपतिर्धरः ११२



नवद्वारपुराधारः प्रत्यग्रः सामगायकः ।

षट्चक्रधामा स्वर्लोको भयहृन्मानदोऽमदः॥
सर्ववश्यकरः शक्तिरनन्तोऽनन्तमङ्गलः।
अष्टमूर्तिधरो नेता विरूपः स्वरसुन्दरः ११४
धूमकेतुर्महाकेतुः सत्यकेतुर्महारथः।
नन्दिप्रियः स्वतन्त्रश्च मेखली समरप्रियः॥
लोहाङ्गः सर्वविद् धन्वी षट्कलः शर्व ईश्वरः।

फलभुक् फलहस्तश्च सर्वकर्मफलप्रदः ।११६।
धर्माध्यक्षो धर्मफलो धर्मी धर्मप्रदोऽर्थदः ।
पञ्चविंशतितत्त्वज्ञस्तारकब्रह्मतत्परः ॥११७॥
त्रिमार्गवसतिर्भीमः सर्वदुःखनिबर्हणः ।
ऊर्जस्वान् निष्कलः शूली माली गर्जन्निशाचरः ।
राम्बरधरो रक्तो रमालाविभूषणः ।
वनमाली शुभाङ्गश्च श्वेतः श्वेताम्बरो युवा ॥

जयो जयपरीवारः सहस्रवदनः कविः ।
शाकिनीडाकिनीयक्षरक्षोभूतौघभञ्जनः १२०
सद्योजातः कामगतिर्ज्ञानमूर्तिर्यशस्करः ।
शम्भुतेजाः सार्वभौमो विष्णुभक्तः प्लवङ्गमः ॥
चतुर्नवतिमन्त्रज्ञः पौलस्त्यबलदर्पहा ।
सर्वलक्ष्मीप्रदः श्रीमानङ्गदाप्रिय ईडितः १२२
स्मृतिर्बीजं सुरेशानः संसारभयनाशनः ।

हृ० ५०

उत्तमः श्रीपरीवारः श्रीभूर्दुर्गा च कामदृक् ॥
सदागतिर्मातरिश्वा रामपादाब्जषट्पदः ।
नीलप्रियो नीलवर्णो नीलवर्णप्रियः सुहृत ॥
रामदूतो लोकबन्धुरन्तरात्मा मनोरमः ।
श्रीरामध्यानकृद् वीरः सदा किंपुरुषस्तुतः ॥
रामकार्यान्तरङ्गश्च शुद्धिर्गतिरनामयः ।
पुण्यश्लोकः परानन्दः परेशः प्रियसारथिः ॥

लोकस्वामी मुक्तिदाता सर्वकारणकारणः। 
महाबलो महावीरः पारावारगतिर्गुरुः॥१२७॥
समस्तलोकसाक्षी च समस्तसुरवन्दितः।
सीतासमेतश्रीरामपादसेवाधुरंधरः ॥१२८॥

इति श्रीसीतासमेतश्रीरामपादसेवाधुरन्धर-
श्रीहनुमत्सहस्रनामस्तोत्रं सम्पूर्णम् ॥

# श्रीमद्भागवत-महापुराण

श्रीशुक-सुधा-सागर [ मोटा टाइप ]—केवल भाषा, पृष्ठ १३६०, चित्र २०, मूल्य .... .... २०)

श्रीमद्भागवत महापुराण-[ दो खण्डोंमें ]—सटीक, पृष्ठ २०३२, चित्र २६, मूल्य .... .... १५)

श्रीभागवत-सुधासागर—भाषानुवाद, पृष्ठ १०१६, चित्र २६, मूल्य ८॥)

श्रीमद्भागवत महापुराण मूल [ मोटा टाइप ]—पृष्ठ ६९२, सचित्र ६)

श्रीमद्भागवत महापुराण मूल[गुटका]—पृष्ठ ७६८, सचित्र, मूल्य ३)

श्रीप्रेमसुधा-सागर—पृष्ठ ३१६, चित्र १५, मूल्य .... ३॥)

श्रीभागवतामृत—सटीक, पृष्ठ ३०४, चित्र ८, मूल्य .... १॥)

भागवत एकादश स्कन्ध—सटीक, पृष्ठ ४४८, मूल्य १) सजिल्द १।=)



व्यवस्थापक—गीताप्रेस, पो० गीताप्रेस ( गोरखपुर )

